LAGHU GADYA SANGRAHA
SERIES
IV

# HARSHA CHARITAM.

WITH A FOREWORD
BY

**Sriman S. KUPPUSWAMI SASTRIAR** M.A.,
*Professor of Sanskrit and Comparative Philology,*
**PRESIDENCY COLLEGE, MADRAS.**

BY

**Pandit, R. V. KRISHNAMACHARIAR,**
**ABHINAVA BHATTA BANA.**

*SRI KOMALAMBA PRESS, KUMBAKONAM.*

*Price*] **1925.** [*6 Annas.*

॥ श्रीः ॥

लघुगद्यसंग्रह रत्नमालायाः

चतुर्थं रत्नम्

# ॥ हर्षचरितम् ॥



मद्रपुरस्थ राजकीयाङ्गलकलाशालायां
संस्कृतभाषापरमाचार्याणां
श्री कुप्पुस्वामिशास्त्रिमहाशयानाम्
उपोद्घातेन सहितम्



अभिनवभट्टबाणेन
श्रीवत्सचक्रवर्तिना
रा. च. वि. कृष्णमाचार्येण
संगृहीतम् ।

कुम्भघोणस्थ
श्री कोमलाम्बामुद्रायन्त्रालये
मुद्रापितम् ॥

१९२५.

मूल्यम् ] [ षट् कलाः ।

# FOREWORD.

I have perused Pandit R. V. Krishnamachariar's *Harshacharita Laghu Sangraha* which is a summary in Bana's words, of his brilliant *Akhyayika.* I am glad to be able to say that it will prove to be of good use to the Sanskrit students of the higher forms of *Secondary Schools* and of the lower classes in the pre-collegiate section of *Advanced Sanskrit Schools* in this province.

*Bhatta-Bana's* style is felt *to be simply irrittating* by alien critics, whose minds have not become attuned and adequately responsive to the charms of the Sanskrit Muse. But Indian *Sahrdayas* know well that Bana's creative genius has beautified the firmament of Sanskrit *belles-lettres* with two literary *rainbows*, one of the charming *lunar* type in the *Kadambari* and the other of the brilliant *solar* type in the *Harshacharita.* And the latter of them Mr. R. V. Krishnamachariar has now miniatured in an agreeable manner, in his *Harsha Charita Laghu Sangraha,* as he did in his *Kadambari Laghu Sangraha* in 1923, with reference to the former.

**S. KUPPUSWAMI SASTRI,**

*Professor of Sanskrit &*

*Comparative Philology,*

15—12—25. PRESIDENCY COLLEGE, MADRAS.

॥ श्रीः ॥

# ॥ हर्षचरितम् ॥



अस्ति पुण्यकृताम् अधिवासः, वासवावास इव वसुधाम् अवतीर्णः श्रीकण्ठो नाम जनपदः ॥

तत्र च प्रथमोऽवतार इव ब्रह्मलोकस्य, प्रतिनिधिरिव चन्द्रलोकस्य, स्थाण्वीश्वराख्यो जनपदविशेषः ॥

तत्र च बुधः सदसि, अर्जुनो यशसि, भीष्मो धनुषि, राजा पुष्पभूतिरिति नाम्ना बभूव ॥

तस्य च सहजा शैशवात् आरभ्य भगवति भवे भूयसी भक्तिः आसीत् ॥

परममाहेश्वरः स भूपालो लोकतः शुश्राव दाक्षिणात्यं भैरवाचार्यनामानं महाशैवम् ॥

श्रवणसमकालमेव तस्मिन् भैरवाचार्ये भगवति द्वितीय इव कपर्दिनि दूरगतेऽपि गरीयसीं बबन्ध भक्तिम् । आचकाङ्क्ष च अस्य दर्शनम् ॥

अथ कदाचित्पर्यस्ते वासरे राजानम् उपसृत्य प्रतीहारी विज्ञापितवती—" देव, द्वारि परिव्राट् आस्ते । कथयति च– भैरवाचार्यवचनात् देवम् अनुप्राप्तोऽस्मि इति " इति ॥

राजा तु तत् श्रुत्वा सादरम्, " क्व असौ ? आनय " इत्यब्रवीत् । तथा च अकरोत् प्रतीहारी ॥

नचिराच्च प्रविशन्तं प्रांशुम् आजानुभुजं मस्करिणम् अद्राक्षीत् क्षितिपतिः । उचितेन च आदरेण एनं प्रत्यग्रहीत् ॥

आसीनं च पप्रच्छ—"क्व भैरवाचार्यः?" इति । सादरनरपतिवचनेन मुदितमनास्तु परिव्राट् तम् उपनगरं सरस्वतीतटवनावलम्बिनि शून्यायतने स्थितम् आचचक्षे । "अर्हयति महाभागं भगवान् आशीर्वचसा" इत्युक्त्वा च उपनिन्ये भैरवाचार्यप्रहितानि रत्नवन्ति पञ्च राजतानि पुण्डरीकाणि ॥

नरपतिस्तु " सर्वफलप्रसवहेतुः शिवभक्तिः मनोरथदुर्लभानि फलति नः फलानि । श्वो द्रष्टास्मि भगवन्तम् " इत्युक्त्वा मस्करिणं व्यसर्जयत् ॥

अपरेद्युश्च प्रातरेव उत्थाय वाजिनम् अधिरुह्य , कतिपयैरेव राजपुत्रैः परिवृतः, भैरवाचार्यं द्रष्टुं प्रतस्थे । गत्वा च, महतः कार्पटिकबृन्दस्य मध्ये, प्रातरेव स्नातम्, अनुष्ठिताग्निकार्यम् , अबहुभाषिणम् , मन्दहासिनम् , सर्वोपकारिणम् , कुमारब्रह्मचारिणम् , धाम धर्मस्य, क्षेत्रं क्षमायाः,आकरं करुणायाः, भगवन्तं भैरवाचार्यं ददर्श ॥

भैरवाचार्यस्तु दूरादेव राजानं दृष्ट्वा शशिनमिव जलनिधिः चचाल । प्रथमतरोत्थितशिष्यलोकश्च उत्थाय प्रत्युज्जगाम । समर्पितश्रीफलोपायनश्च स्वस्तिशब्दम् अकरोत् । नरपतिरपि दूरावनतः प्रणाममभिनवं चकार ॥

भैरवाचार्योऽपि समुचितम् अर्घ्यादिकं चक्रे । राजापि विविधाभिः कथाभिः चिरं स्थित्वा गृहम् अगात् ।

अन्यस्मिन् दिवसे भैरवाचार्योऽपि राजानं द्रष्टुं ययौ । तस्मै च राजा सान्तःपुरं सपरिजनं सकोशम् आत्मानं निवेदितवान् । स च स्थित्वा कंचित्कालं जगाम ॥

परिव्राट् तेनैव क्रमेण पञ्च पञ्च राजतानि पुण्डरीकाणि उपायनीचकार । एकदा तु "महाभाग, भवन्तम् आह भगवान् । यथा— 'अस्मच्छिष्यः पातालस्वामिनामा ब्राह्मणः । तेन ब्रह्मराक्षसहस्तात् अपहृतो महासिः अट्टहासनामा । सोऽयं भवद्भुजयोग्यो गृह्यताम्' इति" इत्यभिधाय अपहृतकर्पटावच्छादनात् परिवारात् आचकर्ष कृपाणम् ॥

अवनिपतिस्तु तं गृहीत्वा करेण, सुचिरं ददर्श । परिव्राट् तु गृहीते तस्मिन्, परितुष्टः "स्वस्ति भवते । साधयामः" इत्युक्त्वा निरयासीत् ॥

अथ व्रजत्सु दिवसेषु एकदा भैरवाचार्यो राजानम् उपह्वरे सोपग्रहम् अवादीत्— "तात, भगवतो महाकालहृदयनाम्नो महामन्त्रस्य महाश्मशाने जपकोट्या कृतपूर्वसेवोऽस्मि । तस्य च वेतालसाधनावसाना सिद्धिः । असहायैश्च सा दुरवापा । त्वं च अलम् अस्मै कर्मणे । त्वयि च गृहीतभरे भविष्यन्ति अपरे सहायाः त्रयः। एकः स एव अस्माकं बालमित्रं टीटिभनामा मस्करी, यो भवन्तम् उपतिष्ठते । द्वितीयः स पातालस्वामी । अपरो मच्छिष्य एव कर्णतालनामा द्राविडः । यदि साधु मन्यसे, ततो नीयताम् अयं गृहीताट्टहासो बाहुः एकदिङ्मुखार्गलताम्" इति ॥

"भगवन्, परम् अनुगृहीतोऽस्मि अनेन निदेशेन" इति नरेन्द्रः समभाषत । ननन्द च तेन नरेन्द्रव्याहृतेन भैरवाचार्यः । चकार च संकेतम्—"अस्यामेव आगामिन्याम् असितपक्षचतुर्दशीक्षपायाम् इयत्यां वेलायाम् अमुष्मिन् महाश्मशानसमीपभाजि शून्यायतने शस्त्रीद्वितीयेन आयुष्मता द्रष्टव्या वयम्" इति ॥

अथ अतिक्रान्तेषु अहस्सु, प्राप्तायां च तस्यामेव कृष्णचतुर्दश्याम्, शैवेन विधिना दीक्षितः क्षितिपो नगरात् निरगात्। अगाच्च तम् उद्देशम्। अथ प्रत्युज्जग्मुः ते त्रयो टीटिभकर्णतालपातालस्वामिनः। आचचक्षिरे च स्वं स्वं नाम ॥

अवनिपतिश्च तैरेव अनुगम्यमानो जगाम तां साधनभूमिम्। तस्यां च कुमुदधूलिधवलेन भस्मना लिखितस्य महतो मण्डलस्य मध्ये स्थितम्, उत्तानशयस्य शवस्य उरसि उपविश्य जातजातवेदसि मुखकुहरे प्रारब्धाग्निकार्यम्, कृष्णोष्णीषम्, कृष्णाङ्गरागम्, कृष्णवाससं भैरवाचार्यम् अपश्यत्। उपसृत्य च अकरोत् नमस्कारम्। अभिनन्दितश्च तेन स्वव्यापारम् अन्वातिष्ठत् ॥

अत्रान्तरे पातालस्वामी शातक्रतवीम् आशाम् अङ्गीचकार, कर्णतालः कौबेरीम्, परिव्राट् प्राचेतसीम्। राजा तु त्रैशङ्कवेन ज्योतिषा अङ्कितां ककुभम् अलंकृतवान् ॥

एवं च अवस्थितेषु दिक्पालेषु, विस्रब्धं कर्म साधयति भैरवाचार्ये, अतिचिरं कृतकोलाहलेषु निष्फलप्रयत्नेषु प्रत्यूहकारिषु शान्तेषु कौणपेषु, गलति अर्धरात्रसमये, मण्डलस्य नातिदवीयसि उत्तरेण अकस्मात् क्षितिः अदीर्यत। सहसैव च तस्मात् विवरात्, चण्डास्फोटनटांकारैः एकेन्द्रियविकलमिव जीवलोकं कुर्वन्, कुवलयश्यामलः पुरुष उज्जगाम। जगाद च—"भोः, किमयं विद्यावलेपः, सहायमदो वा? यत् अस्मै जनाय अविधाय बलिं बालिश इव सिद्धिम् अभिलषसि। का ते दुर्बुद्धिरियम्? एतावता कालेन क्षेत्राधिपतिः नागतस्ते श्रोत्रोपकण्ठं श्रीकण्ठनामा नागोऽहम्?" इत्यभिधाय, निष्ठुरैः प्रकोष्ठप्रहारैः त्रीनपि टीटिभप्रभृतीन् अपातयत् ॥

अथ नरनाथः सावज्ञम् अवादीत्—"रे काकोदर, काक, मयि स्थिते राजहंसे, न जिह्रेषि बलिं याचितुम् ? अमीभिः किं वा परुषभाषितैः? भुजे वीर्यं निवसति, न वाचि। प्रतिपद्यस्व शस्त्रम्। अयं न भवसि" इति । नागस्तु अनादृततरम् "एहि। किं शस्त्रेण ? भुजाभ्यामेव भनज्मि भवतो दर्पम्" इत्यभिधाय आस्फोटयामास । नरपतिरपि उत्सृज्य सचर्मफलकम् असिम्, अर्धोरुकस्य उपरि बबन्ध बाहुयुद्धाय कक्ष्याम् ॥

युयुधाते च तौ बाहुदण्डैः। नचिराच्च पातयामास भूतले भुजंगं भूपतिः। जग्राह च केशेषु । उच्चखान च शिरः छेत्तुम् अट्टहासम् । अपश्यच्च वैकक्षकमालान्तरेण अस्य यज्ञोपवीतम्। उपसंहृतशस्त्रव्यापारश्च अवादीत्— "दुर्विनीत, अस्ति ते दुर्नयनिर्बाहबीजमिदम्। यतो विस्रब्धमेव आचरसि चापलानि" इत्युक्त्वा उत्ससर्ज तम् ॥

अत्रान्तरे च सहसैव अतिबहलां ज्योत्स्नां ददर्श । झटिति नूपुरशब्दम् अशृणोत्। व्यापारयामास च शब्दानुसारेण दृष्टिम्। अथ करतलस्थितस्य अट्टहासस्य मध्ये स्फुरन्तीम्, तामरसहस्ताम्, मृणालकोमलैः अवयवैः कमलसंभवत्वम् अनक्षरम् आचक्षाणां श्रियम् अपश्यत्। असंभ्रान्तश्च "भद्रे, कासि ? किमर्थं वा दर्शनपथम् आगतासि ?" इति पप्रच्छ ॥

सा तु "वीर, विद्धि मां श्रियम्। अपहृता अस्मि तव अमुना शौर्यरसेन। याचस्व। ददामि ते वरम् अभिलषितम्" इति अभाषत॥

राजा तां प्रणम्य, स्वार्थविमुखः, भैरवाचार्यस्य सिद्धिं ययाचे। लक्ष्मीस्तु देवी प्रीततरहृदया, "एवम् अस्तु" इत्यब्रवीत्। अवादीच्च

पुनः— "अनेन सत्त्वोत्कर्षेण भवान् भुवि सूर्याचन्द्रमसोः तृतीय इव अविच्छिन्नस्य महतो राजवंशस्य कर्ता भविष्यति ; यस्मिन् उत्पत्स्यते सर्वद्वीपानां भोक्ता हर्षनामा चक्रवर्ती" इति। वचसोऽन्ते च तीरोबभूव ॥

भैरवाचार्योऽपि देव्या वचसा, कर्मणा च सम्यगुपपादितेन सद्य एव किरीटी कुण्डली खड्गी च भूत्वा अवाप विद्याधरत्वम्। जिगमिषुश्च सुहृदं समालिङ्ग्य टीटिभादीन्, सास्रेण चक्षुषा वीक्षमाणः क्षितिपतिम्, "तात, किं ब्रवीमि—यामीति न स्नेहसदृशम्। त्वदीयाः प्राणा इति पुनरुक्तम्। स्मर्तव्या वयमिति आज्ञा।" इत्यभिधाय गगनतलमुत्पपात। श्रीकण्ठोऽपि "राजन्, पराक्रमक्रीतः कर्तव्येषु नियोगेन अनुग्राह्योऽयं जनः" इत्यभिधाय, राज्ञा अनुमोदितः, तदेव भूयो भूविवरं विवेश ॥

नरपतिस्तु क्षीणभूयिष्ठायां क्षपायाम्, त्रीनपि टीटिभादीन् गृहीत्वा, नागयुद्धव्यतिकरमलीमसानि शुचिनि वनवापीपयसि प्रक्षाल्य अङ्गानि नगरं विवेश ॥

कतिपयदिवसापगमे च परिव्राट् भूभुजा वार्यमाणोऽपि वनं ययौ। पातालस्वामिकर्णतालौ तु शौर्यानुरक्तौ तमेव सिषेवाते। समरमुखेषु च प्रथमम् उपयुज्यमानौ, कथान्तरेषु च अन्तरान्तरा समादिष्टौ विचित्राणि भैरवाचार्यचरितानि शैशववृत्तान्तांश्च कथयन्तौ, तेनैव सार्धं जरां जग्मतुः ॥

इति हर्षचरिते राजवंशवर्णनं नाम तृतीय उच्छ्वासः ॥

---

# ॥ चतुर्थ उच्छ्वासः ॥



अथ तस्मात्पुष्पभूतेः, दुर्जयबलसनाथो हरिवंश इव शूरात् निर्जगाम राजवंशः ॥

यस्मात् अविनष्टधर्मधवलाः प्रतापाक्रान्तभुवना अजायन्त राजानः ॥

तेषु च एवमुत्पद्यमानेषु क्रमेण उदपादि हूणहरिणकेसरी, प्रतापशील इति प्रथितापरनामा प्रभाकरवर्धनो नाम राजाधिराजः ।

तस्य च, पार्वतीव शंकरस्य, लक्ष्मीरिव लोकगुरोः, रोहिणीव कलावतः, हंसमयीव गतिषु, मधुमयीव संभाषणेषु, यशःपुष्टिरिव चारित्रस्य, हृदयतुष्टिरिव धर्मस्य, शमस्यापि शान्तिरिव, विनयस्यापि विनीतिरिव, धैर्यस्यापि धृतिरिव, यशोवती नाम महादेवी प्राणानां प्रणयस्य विस्रम्भस्य धर्मस्य सुखस्य च भूमिरभूत् ॥

निसर्गत एव च स नृपतिः आदित्यभक्तो बभूव । प्रतिदिनम् उदये दिनकृतः स्नातः सितदुकूलधारी प्राङ्मुखः क्षितौ जानुभ्यां स्थित्वा कुङ्कुमपङ्कानुलिप्ते मण्डलके रक्तकमलषण्डेन अर्घं ददौ । अजपच्च प्रत्युषसि मध्यंदिने दिनान्ते च अपत्यहेतोः प्रयतेन मनसा मन्त्रम् आदित्यहृदयम् ॥

ततः समतिक्रान्ते कस्मिंश्चित्कालांशे देव्यां यशोवत्यां देवो राज्यवर्धनः प्रथममेव संबभूव गर्भे । गर्भस्थितस्यैव च यस्य यशसेव पाण्डुताम् अधत्त जननी । अवतीर्णे च दशमे मासि असूत देवं राज्यवर्धनम् ॥

अथान्यस्मिन्नतिक्रान्ते कस्मिंश्चित्काले, नभसि देवक्या इव चक्रपाणिः यशोवत्या हृदये गर्भे च सममेव संबभूव हर्षः। ततश्च प्राप्ते ज्येष्ठामूलीये मासि बहुलासु बहुलपक्षद्वादश्यां व्यतीते प्रदोषसमये समारुरुक्षति क्षपां यौवने, सहसैव अन्तःपुरे समुदपादि कोलाहलः स्त्रीजनस्य। निर्गत्य च ससंभ्रमं यशोवत्याः स्वयमेव हृदयनिर्विशेषा धात्र्याः सुता सुयात्रा राज्ञः पादयोर्निपत्य "देव, दिष्ट्या वर्धसे द्वितीयसुतजन्मना" इति व्याहरन्ती पूर्णपात्रं जहार॥

तत्क्षण एव च शुक्लवाससो ब्रह्ममुखाः समुपतस्थिरे द्विजातयः। साक्षाद्धर्म इव शान्त्युदकफलहस्तः तस्थौ पुरः पुरोधाः। प्रावर्तत च विगतराजकुलस्थितिः, समस्वामिपरिजनः, निर्विशेषबालवृद्धः, दुर्ज्ञेयमत्तामत्तप्रविभागः पुत्रजन्मोत्सवो महान्॥

एवं च वृत्ते तस्मिन्महोत्सवे, शनैः शनैः पुनरपि अतिक्रामति काले, धात्रीकराङ्गुलिलग्ने पञ्चषाणि पदानि प्रयच्छति हर्षे, षष्ठं वर्षम् अवतरति च राज्यवर्धने, देवी यशोवती गर्भेण अधत्त राज्यश्रियम्। पूर्णेषु च प्रसवदिवसेषु गौरीमिव मेना प्रसूतवती दुहितरम्॥

अस्मिन्नेव तु काले देव्या यशोवत्या भ्राता, सुतम् अष्टवर्षदेशीयं मकरध्वजमिव पुनर्जातं भण्डिनामानम् अनुचरं कुमारयोः अर्पितवान्॥

एकदा च भुक्तवान् अभ्यन्तरगतः पिता, सुतौ आहूय, "वत्सौ, प्रथमं राज्याङ्गं दुर्लभाः सद्भृत्याः। अतः परीक्षितौ शुची विनीतौ विक्रान्तौ मालवराजपुत्रौ भ्रातरौ कुमारगुप्तमाधवगुप्तौ भवतोः अनुचरत्वार्थम् अस्माभिः निर्दिष्टौ। अनयोरुपरि भवद्भ्यामपि

नान्यपरिजनसमवृत्तिभ्यां भवितव्यम्" इत्युक्त्वा, तयोराह्वानाय प्रतीहारम् आदिदेश ॥

प्रविश्य च तौ दूरादेव चतुर्भिः अङ्गैः उत्तमाङ्गेन च गां स्पृशन्तौ नमश्चक्रतुः। स्निग्धनरेन्द्रदृष्टिनिर्दिष्टाम् उचितां भूमिं भेजाते। मुहूर्तं च स्थित्वा भूपतिः आदिदेश तौ— "अद्यप्रभृति कुमारौ अनुवर्तनीयौ" इति। ततश्च आरभ्य भुजाविव सततपार्श्ववर्तिनौ कुमारयोः तौ बभूवतुः ॥

अथ राज्यश्रीरपि नृत्यगीतादिषु सकलासु कलासु प्रतिदिनमुपचीयमानपरिचया, शनैः शनैरवर्धत। परिमितैरेव दिवसैः यौवनमारुरोह। निपेतुरेकस्यां तस्यां शरा इव लक्ष्यभुवि भूभुजां सर्वेषां दृष्टयः। दूतप्रेषणादिभिश्च तां ययाचिरे राजानः ॥

कदाचित्तु राजा अन्तःपुरप्रासादस्थितः पार्श्वस्थितां महादेवीं जगाद—"देवि, तरुणीभूता वत्सा राज्यश्रीः। एतदीया गुणवत्तेव क्षणमपि हृदयान्नापयाति मे चिन्ता। प्रायेण च सत्स्वप्यन्येषु वरगुणेषु अभिजनमेव अनुरुध्यन्ते धीमन्तः। धरणीधराणां च मूर्ध्नि स्थितो माहेश्वरो मौखरी वंशः। तत्रापि तिलकभूतस्य अवन्तिवर्मणः सूनुः अग्रजो ग्रहवर्मा नाम पितुरन्यूनो गुणैरेनां प्रार्थयते। यदि भवत्या अपि मतिरनुमन्यते, ततस्तस्मै दातुमिच्छामि" इति ॥

"आर्यपुत्र, संवर्धनमात्रोपयोगिन्यो धात्रीनिर्विशेषा भवन्ति खलु मातरः कन्यकानाम्। दाने तु प्रमाणमासां पितरः" इति महादेवी प्रत्युवाच ॥

राजा तु जातनिश्चयो दुहितृदानं प्रति, समाहूय सुतावपि विदितार्थौ अकार्षीत्। शोभने च दिवसे ग्रहवर्मणा प्रेषितस्य प्रधान-

दूतपुरुषस्य करे सर्वसमक्षं दुहितृदानजलम् अपातयत् । जातमुदि कृतार्थे गते च तस्मिन् , आसन्नेषु च विवाहदिवसेषु, रमणीयं च औत्सुक्यदं च मङ्गल्यं च आसीद्राजकुलम् ॥

देवी तु यशोवती विवाहोत्सवपर्याकुलहृदया, हृदयेन भर्तरि, कुतूहलेन जामातरि, स्नेहेन दुहितरि, उपचारेण निमन्त्रितस्त्रीषु, आदेशेन परिजने, एकापि बहुधा विभक्तेवाभवत् ॥

एवं च तस्मिन्नविधवामय इव भवति राजकुले, भूषणमय इव भ्रमति परिजने, लक्ष्मीमय इव विजृम्भमाणे महोत्सवे, आलोक्यमान इव मार्गध्वजैः, आहूयमान इव मौहूर्तिकैः, आकृष्यमाण इव मनोरथैः, आजगाम विवाहदिवसः । प्रातरेव प्रतीहारैः समुत्सारितनिखिलानिबद्धलोकं विविक्तम् अक्रियत राजकुलम् ॥

अथ प्रतीहारः प्रविश्य नृपसमीपम् " देव, जामातुरन्तिकात् ताम्बूलदायकः पारिजातकनामा संप्राप्तः " इत्यभिधाय, स्वाकारं युवानम् अदर्शयत् । आगतजामातृनिवेदनागतं च तं ज्ञात्वा राजा " यामिन्याः प्रथमे यामे विवाहकालात्ययकृतो यथा न भवति दोषः" इति संदिश्य प्रतीपं प्राहिणोत् ॥

अथ समवसिते वासरे, नक्षत्रमालामण्डितमुखीं करिणीमारूढः, दीपिकाचक्रवालस्यालोकेन पिञ्जरीकुर्वन्सकलं जीवलोकम् , नववधूवदनालोकनकुतूहलेनेव कृष्यमाणहृदयः आजगाम प्रत्यासन्नलग्नो गृहवर्मा ॥

नचिराच्च नृपमुपसृत्य मौहूर्तिकाः" देव, समासीदति लग्नवेला । व्रजतु जामाता कौतुकगृहम् " इत्यूचुः । अथ नरेन्द्रेण " गच्छ " इति गदितो गृहवर्मा आससाद कौतुकगृहद्वारम् । निवारितपरिज-

नश्च प्रविवेश । तत्र कतिपयप्रियसखीस्वजनप्रायपरिवाराम् , अरुणांशुकावगुण्ठितमुखीम् , चन्दनधवलतनुलताम् , कुसुमामोदनिर्हारिणीम् , अधोमुखीम् , मुहुर्मुहुः कृतमुखोन्नमनप्रयत्नं च सखीजनं निर्भर्त्सयन्तीं वधूमपश्यत् ॥

परिहासस्मेरमुखीभिश्च नारीभिः कौतुकगृहे यद्यत् कार्यते जामाता,तत्तत् सर्वमतिपेशलं चकार । कृतपरिणयानुरूपवेषपरिगृहां गृहीत्वा करे वधूं निर्जगाम । जगाम च नवसुधाधवलाम् उपकृशानु निहितानुपहतहरितकुशां वेदीम् । आरुरोह च तां दिवमिव सज्योत्स्नः शशी । हुते च हुतभुजि, दाक्षिणावर्तप्रवृत्ताभिः ज्वालाभिरेव सह प्रदक्षिणं बभ्राम । पात्यमाने लाजाञ्जलौ, अदृष्टपूर्ववधूवररूपविस्मयस्मेर इव अदृश्यत विभावसुः ॥

अत्रान्तरे निर्वदनविकारं रुरोद वधूः । उदश्रुविलोचनानां च बान्धववधूनाम् उदपादि महानाक्रन्दः। परिसमापितवैवाहिकाक्रियाकलापस्तु जामाता, वध्वा समं प्रणनाम श्वशुरौ । प्रविवेश च मङ्गलप्रदीपैः प्रकाशितम् , सोपधानेन स्वास्तीर्णेन शयनेन शोभमानम्, शयनशिरोभागस्थितेन च निद्राकलशेन राजतेन विराजमानं वासगृहम् ॥

स्थित्वा च अभिनवोपचारैः अपुनरुक्तानि आनन्दमयानि दश दिनानि, कथं कथमपि विसर्जितो नृपेण, वध्वा सह स्वदेशमगमत्॥

इति हर्षचरिते चक्रवर्तिजन्मवर्णनं नाम चतुर्थ उच्छ्वासः ॥



# ॥ पञ्चम उच्छ्वासः ॥



अथ कदाचित् राजा राज्यवर्धनं कवचहरम् आहूय हूणान् हन्तुम् उत्तरापथं प्राहिणोत् । प्रयान्तं च तं देवो हर्षः कतिचित्प्रयाणकानि तुरंगमैः अनुवव्राज । प्रविष्टे च कैलासप्रभाभासिनीं ककुभं भ्रातरि, तुषारशैलोपकण्ठेषु क्रीडन् मृगयाम्, कतिपयानि अहानि बहिरेव व्यलम्बत ॥

एकदा तु वासतेय्यास्तुरीये यामे, प्रत्युषस्येव स्वप्ने दवहुतभुजा दह्यमानं केसरिणमद्राक्षीत् । तस्मिन्नेव दावदहने समुत्सृज्य शावकान् उत्प्लुत्य चात्मानं पातयन्तीं सिंहीमप्यपश्यत् । प्रबुद्धस्य चास्य मुहुर्मुहुः दक्षिणेतरत् अक्षि पस्पन्दे । अह्नि च तस्मिन्, शून्येनैव चेतसा चिक्रीड मृगयाम् । आरोहति च हरितहये मध्यमह्नः, भवनमागत्य, वेत्रपट्टिकामधिशयानः साशङ्क एव तस्थौ ॥

अथ दूरादेव लेखगर्भया चीरचीरिकया रचितमुण्डमालकम्, वर्त्मनि शून्यहृदयतया स्खलन्तं कुरङ्गकनामानम् आयान्तमद्राक्षीत् । दृष्ट्वा च अभिद्यत हृदयेन । कुरङ्गकस्तु कृतप्रणामः, उपनिन्ये लेखम् । तं च देवो हर्षः स्वयमेवावाचयत् । "कुरङ्गक, किं मान्द्यं तातस्य?" इत्यभ्यधात् । स च "देव, दाहज्वरो महान्" इत्याचचक्षे । तच्चाकर्ण्य सहसा सहस्रधेवास्य हृदयं पफाल । कृताचमनश्च जनयितुरायुष्कामः, आत्मपरिबर्हमशेषं ब्राह्मणसादकरोत् । अभुक्त एवोच्चचाल । वेपमानहृदयश्च, आरुह्य तुरङ्गम् एकाक्येव प्रावर्तत (गन्तुम्) ॥

तूष्णींभूतेन च भूपाललोकेनानुगम्यमानः, बहुयोजनसंपिण्डितमध्वानम् एकेनैवाह्ना समलङ्घयत् । भण्डिप्रमुखेण राजपुत्रलोकेन

बहुशो विज्ञाप्यमानोऽपि नाहारमकरोत् । वहन्नेव निन्ये निशाम् ॥

अन्यस्मिन्नहनि मध्यंदिने, विगतजयशब्दम् , अस्तमिततूर्य-नादम् , उपसंहृतगीतम् , उत्सारितोत्सवम् , शून्यमिव स्कन्धावारं समाससाद । तुरगादवतीर्णश्च " सुषेण, अस्ति तातस्य विशेषः, न वा " इति वैद्यकुमारमप्राक्षीत् । सोऽब्रवीत्—" नास्ति इदानीम् । यदि भवेत्कुमारं दृष्ट्वा " इति । मन्दं मन्दं प्रणम्यमानश्च द्वारपालैः, दीयमानसर्वस्वम् , पूज्यमानकुलदेवतम् , प्रयतविप्रप्रस्तुतसंहिताज-पम् , कथ्यमानकष्टपार्थिवावस्थं राजकुलं विवेश ॥

तत्र चातिनिःशब्दे संज्ञानिर्दिश्यमानसकलकर्मणि धवलगृहे स्थितम् , ज्वरज्वलनेन अनवरतपरिवर्तनैः शयनीये विचेष्टमानम् , पीतमिव पीडाभिः,जग्धमिव जागरेण, निगीर्णमिव वैवर्ण्येन, विरलं वाचि, क्षीणमायुषि, प्रचुरं प्रलापे, पार्श्वोपविष्टया मुहुर्मुहुः "आर्य-पुत्र, स्वपिषि ?" इति व्याहरन्त्या देव्या यशोवत्या शिरसि वक्षसि च स्पृश्यमानं पितरमद्राक्षीत् ॥

दृष्ट्वा च अन्तकपुरवर्तिनमेव पितरममन्यत । निराकृत इव अ-न्तःकरणेन क्षणमासीत् । पस्पर्श च हृदयेन भियम् , उत्तमाङ्गेन च गाम् । अवनिपतिस्तु दूरादेव दृष्ट्वा अतिदयितं तनयम् , तदवस्थोऽपि निर्भरस्नेहावर्जितः प्रसार्य भुजौ " एह्येहि " इत्याह्वयन् , विस्मृतज्वर-संज्वरः, बलादुरसि निवेश्य सुचिरमालिलिङ्ग । क्षयक्षामकण्ठश्च कृ-च्छ्रादिवावादीत्—" वत्स, कृशोऽसि " इति । भण्डिस्त्वकथयत्—" देव, तृतीयमहः कृताहारस्यास्य अद्य " इति ॥

तच्छ्रुत्वा, आयतं निःश्वस्य, उवाच—" वत्स, जानामि त्वां पितृप्रियम् अतिमृदुहृदयम् । निशितमिव शस्त्रं तक्ष्णोति मां त्वदीयः

तनिमा । सुखं च राज्यं च वंशश्च प्राणाश्च त्वयि मे स्थिताः । तदुत्तिष्ठ । कुरु पुनरेव सर्वाः क्रियाः । कृताहारे च त्वयि, अहमपि स्वयमुपयोक्ष्ये पथ्यम् " इति । क्षणमात्रं च स्थित्वा पित्रा पुनराहारार्थमादिश्यमानो धवलगृहादवततार ॥

राजपुरुषेणाधिष्ठितश्च गत्वा स्वधाम, धूममयानिव कृताश्रुपातान् अग्निमयानिव जनितहृदयतापान् कतिचित्कवलान् अगृह्णात् । अस्ताभिलाषिणि च सवितरि, सर्वानाहूय उपह्वरे वैद्यान्, " किमस्मिन्नेवंविधे विधेयमधुना " इति विषण्णहृदयः पप्रच्छ । तेषां तु भिषजां मध्ये, अष्टादशवर्षदेशीयः पारं गतोऽष्टाङ्गस्य आयुर्वेदस्य रसायनो नाम वैद्यकुमारकः " देव, श्वः प्रभाते यथावस्थितम् आवेदयितास्मि " इत्यब्रवीत् ॥

गतेषु च भिषक्षु, क्षतधृतिः क्षपामुखे क्षितिपालसमीपमेव पुनरारुरोह । दूयमानहृदयो दुःखदीर्घां जाग्रदेव निशामनैषीत् ॥

उषसि चावतीर्य, चरणाभ्यामेवाजगाम स्वमन्दिरम् । तत्र च त्वरमाणो भ्रातुरागमनार्थम् उपर्युपरि क्षिप्रपातिनो दीर्घाध्वगान् प्रजाविनश्च उष्ट्रपालान् प्राहिणोत् । अग्रतः स्थितानां च राजपुत्रयूनां विमनसाम् " रसायनो रसायनः " इति जल्पितमव्यक्तमश्रौषीत् । पृष्टाश्च ते " देव, पावकं प्रविष्टः " इति दुःखेन कथं कथमप्याचचक्षिरे । तच्च श्रुत्वा प्लुष्ट इवान्तस्तापेन सद्यो विवर्णतामगात् । दुःखार्तश्च न जगाम राजसद्म । समुत्ससर्ज च सर्वकार्याणि । शयनीये निपत्य उत्तरीयवाससा सोत्तमाङ्गमात्मानमवगुण्ठ्य अतिष्ठत् । महोत्पातदर्शनदूयमानश्च कथमपि निनाय निशाम् ॥

अन्यस्मिन्नहनि, " क कुमारः, क कुमारः " इति प्रविशपुरुषं

पृच्छन्ती वेलेति नाम्ना यशोवत्याः प्रतीहारी समीपमस्याजगाम । उपसृत्य च " देव, परित्रायस्व परित्रायस्व । जीवत्येव भर्तरि, किमप्यध्यवसितं देव्या " इति विज्ञापितवती । ततस्तदाकर्ण्य, च्युत इव सत्त्वेन, द्रुत इव दुःखेन, अप्रतिपत्तिरासीत् ॥

उत्थाय च त्वरमाणोऽन्तःपुरमगात् । प्रविशन्नेव, निर्यान्तीम्, दत्तसर्वस्वापतेयाम्, गृहीतमरणप्रसाधनाम्, कुसुम्भबभ्रुणी वाससी दधानाम्, भूपालवल्लभान्कौलेयकानपि सास्रमालोकयन्तीम्, सपत्नीनामपि पादयोः पतन्तीम्, भवनपादपानपि परिष्वजमानां मातरं ददर्श ॥

" अम्ब, त्वमपि मां मन्दपुण्यं त्यजसि? प्रसीद । निवर्तस्व " इति चरणयोर्न्यपतत् । देवी तु तथा तिष्ठति पादनिहितशिरसि विमनसि कनीयसि प्रेयसि तनये, कृतप्रयत्नापि निवारयितुं न शशाक बाष्पोत्पतनम् । दूयमानमानसा च स्मरन्ती प्रसवदिवसादारभ्य सकलं शैशवमस्य, " हा वत्स, विश्रान्तभागधेयया न दृष्टोऽसि " इति प्रेष्ठं ज्येष्ठं तनयमसंनिहितं क्रोशन्ती, " अनाथा जाता " इति श्वशुरकुलवर्तिनीं दुहितरमनुशोचन्ती, मुक्तकण्ठमतिचिरं प्राकृतप्रमदेव प्रारोदीत् ॥

प्रशान्ते च मन्युवेगे, सस्नेहमुत्थापयामास सुतम् । हस्तेन चास्य प्ररुदितस्य क्षरन्तीं दृष्टिमुन्ममार्ज । " वत्स, नासि न प्रियो निर्गुणो वा परित्यागार्हो वा । स्तन्येनैव सह त्वया पीतं मे हृदयम् । कुलकलत्रमस्मि चारित्रधना धर्मधवले कुले जाता । किं विस्मृतोऽसि मां समरशतशौण्डस्य पुरुषप्रकाण्डस्य गृहिणीम् । वीरजा वीरजननी च मादृशी पराक्रमक्रीता कथमन्यथा कुर्यात् । एवंविधेन पित्रा

ते गृहीतः पाणिः । मर्तुमविधवैव वाञ्छामि । मरणाश्च मे जीवितमेवास्मिन् समये साहसम् । तदहमेव त्वां तात, प्रसादयामि । न पुनर्मनोरथप्रातिकूल्येन कदर्थनीयास्मि " इत्युक्त्वा पादयोरपतत् ॥

स तु ससंभ्रममपनीय चरणयुगलम् , अवनमिततनुः, उद्नमयन्मातरम् । कुलयोषिदुचितां च तामेव श्रेयसीं मन्यमानः क्रियाम्, तूष्णीमधोमुखोऽभवत् ॥

देव्यपि परिष्वज्य समाघ्राय च शिरसि, निर्गत्य चरणाभ्यामेव अन्तःपुरात् , सरस्वतीतीरं ययौ । तत्र च भगवन्तं चित्रभानुं प्राविशत् । इतरोऽपि मातृमरणविह्वलः पितुः पार्श्वं प्रायात् । अपश्यच्च स्वल्पावशेषप्राणवृत्तिं जनयितारम् । आश्लिष्यास्य पादपद्मौ, इतरवद्विमुक्तारावाश्चिरं रुरोद ॥

राजा तु तम् उपरुध्यमानदृष्टिः अविरतरुदितशब्दाश्रितश्रवणः प्रत्यभिज्ञाय शनैः शनैरवादीत्— " पुत्र, नार्हस्येवं भवितुम् । भवद्विधा नह्यमहासत्त्वाः । सत्त्ववतां चाग्रणीः सर्वातिशयाश्रितः क्व भवान् , क्व वैक्लव्यम् " इत्येवं वदन्नेव अपुनरुन्मीलनाय निमिमील राजसिंहो लोचने ॥

अस्मिन्नेव चान्तरे पूषापि आयुषेव तेजसा व्ययुज्यत । पूर्वस्यां दिशि दृश्यमाने चन्द्रमसि, नरेन्द्रः स्वयं समर्पितस्कन्धैर्गृहीत्वा शवशिबिकां सामन्तैः पौरैश्च पुरोहितपुरःसरैः सरितं सरस्वतीं नीत्वा नरपतिसमुचितायां चितायां हुताशसंस्क्रियया यशःशेषतामनीयत ॥

देवोऽपि हर्षः शोकमूकेन राजकुलसंबद्धेन लोकेन परिवृतः, निर्व्यवधानायां भूमावुपविष्ट एव तां निशीथिनीं जजागार । अस्य कथमपि सा क्षयमियाय यामिनी । ततो निर्जगाम राजकुलात् ।

अगाच्च सरस्वतीतीरम्। तस्यां स्नात्वा पित्रे ददावुदकम्। अपस्नातश्च निरातपत्रश्चरणाभ्यामेव भवनमाजगाम ॥

देवमपि हर्षं तदवस्थं श्रियं शाप इति महीं महापातकमिति राज्यं रोग इति जीवितम् अयश इति आहारं विषमिति मन्यमानं सर्वासु क्रियासु विमुखम्, कुलपुत्राः, गुरवः, जरद्द्विजातयः, अमात्याः ब्रह्मवादिनः, पौराणिकाश्च शोकापनयननिपुणाः पर्यवारयन् ॥

अनुनीयमानश्च तैः, कथं कथमप्याहारादिकासु क्रियासु आभिमुख्यमभजत । भ्रातृगतहृदयश्चाचिन्तयत्—"अपि नाम तातस्य मरणमिदमुपश्रुत्य आर्यो बाष्पजलस्नातो न गृह्णीयात् वल्कले ? नाश्रयेद्वा राजर्षिराश्रमपदम् ? न विशेद्वा पुरुषसिंहो गिरिगुहाम् ? इहागतो वा राजभिरभिधीयमानो न पराचीनतामाचरेत् ?" इत्येतानि चान्यानि च चिन्तयन्, भ्रातुरागमनमुदीक्षमाणः कथं कथमप्यतिष्ठत् ॥

इति हर्षचरिते महाराजमरणवर्णनं नाम पञ्चम उच्छ्वासः ॥



## ॥ षष्ठ उच्छ्वासः ॥

अथ प्रथमप्रेतपिण्डभुजि भुक्ते द्विजन्मनि, गतेषु उद्वेजनीयेष्वाशौचदिवसेषु, नीतेषु तीर्थस्थानानि कीकसेषु, क्रमेण च मन्देष्वाक्रन्देषु, काव्यावशेषनाम्नि नरनाथे, देवो हर्षः कदाचित् वृद्धबन्धुवर्गाग्रेसरेण महाजनेन आत्मानं वेष्ट्यमानमद्राक्षीत् । वेपमानहृदयश्च पप्रच्छ प्रविशन्तम् अन्यतमं पुरुषम्—"अङ्ग कथय । किमार्यः प्राप्तः" इति । स मन्दमब्रवीत्—"देव, यथादिशसि, द्वारि" इति ॥

अनन्तरं च द्वारपालमुक्तेन प्रथमप्रविष्टेन परिजनेनेव आक्रन्देन कथ्यमानम् , प्रथीयसा बाष्पपयःप्रवाहेण महीमनवरतं सिञ्चन्तम्, क्रीतमिव कार्श्येन , पिष्टमिव पीडया, असाध्येन साधुभाषितानाम् अगम्येन गुरुगिराम् अपथेन प्रज्ञाप्रयत्नानां शोकेन कवलीकृतं ज्येष्ठं भ्रातरमपश्यत् ॥

अथ दूरादेव दृष्ट्वा देवो राज्यवर्धनः, चिरकालकलितं बाष्पवेगं मुमुक्षुः, सुदूरप्रसारितेन दोर्दण्डद्वयेन गृहीत्वा कण्ठे भ्रातरम् , मुक्तकण्ठं रुरोद । सुचिराच्च कथं कथमपि निर्वृष्टनयनजलः स्वयमेवोपशशाम। तूष्णीमेव च चिरं स्थित्वा उत्थाय स्नानभूमिमगात् । तस्यां च स्थित्वा मौलिमनादरात् निष्पीड्य, चतुःशालवितर्दिकायां पर्यङ्कियां निपत्य जोषमस्थात् ॥

देवोऽपि हर्षस्तथैव स्नात्वा अदूर एवास्य समवातिष्ठत । दृष्ट्वा दृष्ट्वा दूयमानमानसमग्रजन्मानं समस्फुटदिव अस्य सहस्रधा हृदयम् । सर्वस्मिन्नेव नगरे न केनाचिदस्नायि, न केनचिदपाचि, न केनचिद्भोजि, सर्वत्र सर्वेणारोदि । केवलमनेन क्रमेण अतिचक्राम दिवसः। स च पारावारपयसि ममज्ज मञ्जिष्ठारुणोऽरुणसारथिः । अक्रोशत चाकाशे शशाङ्कमण्डलम् । अस्यां च वेलायाम् अनतिक्रमणीयवचनैरुपसृत्य प्रधानसामन्तैर्विज्ञाप्यमानः कथंकथमप्यभुक्त ॥

प्रभातायां च शर्वर्याम् सर्वेषु प्रविष्टेषु राजसु, समीपस्थितं हर्षदेवमुवाच— " तात, भूमिरसि गुरुनियोगानाम् । शैशव एवाग्राहि भवता तातस्य चित्तवृत्तिः । भवन्तमेवंविधं विधेयं किमपि विभणिषति मे हृदयम् । नालम्बनीया बालभावसुलभा वामता । न खलु न जानासि लोकवृत्तम् । मांधातरि मृते किं कृतं पुरुकुत्सेन,

दिलीपे वा रघुणा, दशरथे वा रामेण, दुष्यन्ते वा भरतेन । यं च किल शोकः समभिभवति, तं कापुरुषमाचक्षते । स्त्रियो हि विषयः शुचाम् । तथापि किं करोमि । एवमास्पदं पितृशोकहुतभुजो जातोऽस्मि । मम हि प्रनष्टः प्रज्ञालोकः । प्रज्वलितं हृदयम् । नोपसर्पति विवेकः । मुह्यति मतिः । सोऽहमिच्छामि मनसि सुलग्नं स्नेहमलमिदं क्षालयितुमाश्रमपदे । त्वं गृहाण मे राज्यचिन्ताम् । परित्यक्तं मया शस्त्रम्" इत्येवमभिधाय खड्गग्राहिणो हस्तादादाय निजं निस्त्रिंशमुत्ससर्ज धरण्याम् ॥

अथ तच्छ्रुत्वा निशिताशिखेन शूलेनेवाहतो देवो हर्षः समचिन्तयत्—"किं नु खलु मामन्तरेण आर्यः केनचिदसहिष्णुना किंचित् ग्राहितः कुपितः स्यात् ? उतानया दिशा परीक्षितुकामो माम् । उत शोकजन्मा चेतसः समाक्षेपोऽयमस्य । आहोस्वित् आर्य एवायं न भवति । को हि नाम तद्विधे निपतिते जनयितरि, ईदृशे च भ्रातरि तपोवनं गच्छति, मृद्गोलकं वसुधाभिधानं चण्डालोऽपि कामयेत । कथमिव संभावितमत्यन्तमनुचितमिदमार्येण । किं वास्य चेतसश्च्युतः सौमित्रिः ? किं वा ममानेन वृथा बहुधा विकल्पितेन । तूष्णीमेवार्यमनुगच्छामि" इत्यवधार्य तूष्णीमवातिष्ठत ॥

अत्रान्तरे पूर्वादिष्टेनैव वस्त्रकर्मान्तिकेन समुपस्थापितेषु वल्कलेषु, रटति राजस्त्रैणे, निराशेषु निश्वसत्सु सामन्तेषु, सबालवृद्धासु तपोवनाय प्रस्थितासु प्रजासु, सहसैव प्रविश्य प्रक्षरितनयनसलिलो राज्यश्रियः परिचारकः संवादको नाम विमुक्ताक्रन्दः सदस्यात्मानमपातयत् ॥

अथ संभ्रान्तो राज्यवर्धनस्तं पर्यपृच्छत्—"भद्र; भण भण ।

किमपरमुपनयति विधिः" इति । स कथं कथमप्यकथयत्—" देव, पिशाचानामिव नीचात्मनां चरितानि छिद्रप्रहारीणि प्रायशो भवन्ति। यस्मिन्नहनि अवनिपतिरुपरत इत्यभूद्वार्ता, तस्मिन्नेव देवो ग्रहवर्मा दुरात्मना मालवराजेन जीवलोकमात्मनः सुकृतेन सह त्याजितः। भर्तृदारिकापि राज्यश्रीः सनिगडचरणा कान्यकुब्जे कारायां निक्षिप्ता। किंवदन्ती च, यथा— अनायकं साधनं मत्वा जिघृक्षुः सुदुर्मतिरेतामपि भुवमाजिगमिषति इति। विज्ञापिते प्रभुः प्रभवति "इति ॥

ततश्च तादृशमनुपेक्षणीयम् आकस्मिकमपरं व्यतिकरमाकर्ण्य अश्रुतपूर्वत्वात्परिभवस्य, कृपाभूमिभूतायाश्च स्वसुः स्नेहात्स तादृशोऽपि एकपद एवास्य ननाश शोकावेगः। विवेश च सहसा हृदयं कोपावेगः। "आयुष्मन्, इदं राजकुलम्, अमी बान्धवाः, परिजनोऽयम्, इयं भूमिः, एताः प्रजाः। गतोऽहमद्यैव मालवकुलप्रलयाय। इदमेव तावत् वल्कलग्रहणम्, इदमेव तपः, शोकापगमोपायश्चायमेव, यत् अरिनिग्रहः। सोऽयं कुरङ्गकैः कचग्रहः केसरिणः, अलगर्दैर्गलग्रहो गरुडस्य, यो मालवैः परिभवः पुष्पभूतिवंशस्य। अन्तरितस्तापो मे महीयसा मन्युना। तिष्ठन्तु सर्व एव राजानः करिणश्च त्वयैव सार्धम्। अयमेको भण्डिः अयुतमात्रेण तुरंगमाणामनुयातु माम्" इत्यनुजमभिधाय तस्मिन्नेव वासरे निर्जगाम अभ्यमित्रम्॥

अथ तथा गते भ्रातरि, उपरते च पितरि, प्रोषितजीविते च जामातरि, मृतायां च मातरि, संयतायां च स्वसरि, स्वयूथभ्रष्ट इव वन्यः करी देवो हर्षः कथं कथमप्येकाकी कालं समनैषीत्॥

अतिक्रान्तेषु च बहुषु वासरेषु, कदाचित्, आस्थानगतः सहसैव प्रविशन्तम् अनुप्रविशता विषण्णवदनेन लोकेनानुगम्यमानं

कुन्तलं नाम बृहदश्ववारं राज्यवर्धनस्य प्रसादभूमिं ददर्श। तस्माच्च हेलानिर्जितमालवानीकमपि गौडाधिपेन मिथ्योपचारोपचितविश्वासं मुक्तशस्त्रमेकाकिनं स्वभवन एव भ्रातरं व्यापादितमश्रौषीत् ॥

श्रुत्वा च महातेजस्वी प्रजज्वाल। ततश्च हर इव कृतभैरवाकारः, हरिरिव प्रकटितनरसिंहरूपः परां भीषणतामयासीत्। अवादीच्च—"गौडाधिपमपहाय कस्तादृशं महापुरुषं मुक्तशस्त्रं सर्वलोकविगर्हितेन मृत्युना शमयेदार्यम्? कां नु गतिं गमिष्यति? कस्मिन्वा नरके पतिष्यति? श्वपाकोऽपि क इदमाचरेत्? क्वेदानीं यास्यति दुर्बुद्धिः?" इत्यभिदधत एवास्य, पितुरपि मित्रं सेनापतिः सिंहनादनामा विज्ञापितवान्—"देव, न कश्चित्कृताश्रयया मलिनया हतलक्ष्म्या विप्रलभ्यमानमात्मानं न चेतयन्ते कापुरुषाः। किं वा करोतु वराकः, येन अतिभीरुतया नित्यपराङ्मुखेन न दृष्टान्येव तेजस्विनां मुखानि। यश्चाहितहतस्वजनो मनस्विजनो विपक्षवनिताचक्षुषा ददाति जलम्, स श्रेयान् नेतरः। न च स्वप्नदृष्टनष्टेष्विव क्षणिकेषु शरीरेषु निबध्नन्ति बन्धुबुद्धिं प्रबुद्धाः। मणिप्रदीपमिव कज्जलमलो न स्पृशत्येव तेजस्विनं शोकः। स त्वं सत्त्ववतामग्रणीः, प्राग्रहरः प्राज्ञानां, प्रथमः समर्थानाम्। किं गौडाधिपेनैकेन। तथा कुरु, यथा नान्योऽपि कश्चिदाचरत्येवं भूयः। क्ष्मापतीनां शिरःसु शरत्सवितेव ललाटंतपान्प्रयच्छ पादन्यासान्" इत्युक्त्वा व्यरंसीत्॥

देवस्तु हर्षस्तं प्रत्यवादीत्—"करणीयमेवेदमभिहितं मान्येन। जीवति जाल्मे जगद्विगर्हिते गौडाधिपचण्डाले, जिह्रेमि पोटेव प्रतीकारशून्यं शुचा सूत्कर्तुम्। श्रूयतां मे प्रतिज्ञा। शपाम्यार्यस्यैव पादपांसुस्पर्शेन— यदि परिगणितैरेव वासरैः निर्गौडां न करोमि मेदि-

नीम्, ततस्तनूनपाति पातकी पातयाम्यात्मानम्" इत्युक्त्वा च महासंधिविग्रहाधिकृतमन्तिकस्थम् अवन्तिमादिदेश— "लिख्यतां सर्वेषां राज्ञाम्—सज्जीक्रियन्तां कराः करदानाय, शस्त्रग्रहणाय वा। गृह्यन्तां दिशः, चामराणि वा। नमन्तु शिरांसि, धनूंषि वा। मुच्यन्तां भूमयः, इषवो वा। परागतोऽहम्" इति। कृतनिश्चयश्च स्वस्थवत् निःशेषमाह्निकमकार्षीत्। अगलच्च शाम्यदूष्मा दिवसः। ततश्च प्रदोषास्थाने नातिचिरं तस्थौ। प्रतिषिद्धपरिजनप्रवेशश्च शयनगृहं प्राविशत्। उत्तानश्च मुमोचाङ्गानि शयनतले॥

प्रभातायां च शर्वर्यां, प्रातरेव प्रतीहारमादिदेश— "अशेषगजसाधनाधिकृतं स्कन्दगुप्तं द्रष्टुमिच्छामि" इति। युगपत्प्रधावितबहुपुरुषपरंपराहूयमानः स्वमन्दिरात् अप्रतिपालितकरेणुश्चरणाभ्यामेव, संभ्रान्तः, निष्कारणबान्धवो विदग्धानाम् अक्रीतदासो विदुषां स्कन्दगुप्तो विवेश राजकुलम्। दूरादेव च स्पृशन्मौलिना महीतलं नमस्कारमकरोत्॥

उपविष्टं च नातिनिकटे तं तदा जगाद देवो हर्षः—"श्रुतो विस्तर एवास्य आर्यव्यतिकरस्य अस्मच्चिकीर्षितस्य च? अतः शीघ्रं प्रवेश्यन्तां प्रचारनिर्गतानि गजसाधनानि। न क्षाम्यत्यतिस्वल्पमपि आर्यपरिभवपीडापावकः प्रयाणविलम्बम्" इत्येवमभिहितश्च प्रणम्य व्यज्ञापयत्—"कृतमवधारयतु स्वामी समादिष्टम्। किंतु स्वल्पं विज्ञाप्यमस्ति भर्तृभक्तेः। तदाकर्णयतु देवः—देवेन हि पुष्पभूतिवंशसंभूतस्य सहजस्य तेजसः, असाधारणस्य च सोदरस्नेहस्य सदृशमुपक्रान्तम्। देवराज्यवर्धनोदन्तेन च कियदपि दृष्टमेव देवेन दुर्जनदौरात्म्यम्। प्रतिग्रामं प्रतिनगरं प्रतिदेशं च भिन्ना वेषाश्च आकाराश्च आहाराश्च

व्यवहाराश्च । तदियमात्मदेशाचारोचिता स्वभावसरलहृदयजा त्यज्यतां सर्वविश्वासिता । प्रमाददोषाभिषङ्गेषु श्रुतबहुवार्त एव प्रतिदिनं देवः । " इत्युक्त्वा विरराम । स्वाम्यादेशसंपादनाय च निर्जगाम ॥

देवोऽपि हर्षः सकलराज्यस्थितीश्चकार । ततश्च तथा कृतप्रतिज्ञे प्रयाणं विजयाय दिशां समादिशति देवे हर्षे, गतायुषां प्रतिसामन्तानाम् उद्वासितेषु बहुरूपाण्युपलिङ्गानि वितेनिरे ॥

इति हर्षचरिते राजप्रतिज्ञावर्णनं नाम षष्ठ उच्छ्वासः ॥



## ॥ सप्तम उच्छ्वासः ॥



अथ व्यतीतेषु केषुचिद्दिवसेषु, मौहूर्तिकमण्डलेन शतशः सुगणिते सुप्रशस्ते अहनि, स्नात्वा विरचय्य परमया भक्त्या भगवतो नीललोहितस्यार्चाम् , विमुच्य बन्धनानि, भवनान्निर्जगाम ॥

नातिदूरे च नगरात् उपसरस्वति निर्मिते महति तृणमये मन्दिरे स्थानमकरोत् । तत्रस्थस्य चास्य ग्रामाक्षपटालिकः सकलकरणिपरिकरः, " करोतु देवो दिवसग्रहणमद्यैव अवन्ध्यशासनः शासनानाम् "इत्यभिधाय वृषाङ्काम् अभिनवघटितां हाटकमयीं मुद्रामुपनिन्ये । जग्राह च तां राजा । निनाय च तत्र तं दिवसम् । प्रतिपन्नायां च शर्वर्यां सुष्वाप ॥

अथ गलति तृतीये यामे, गम्भीरध्वनिरताड्यत प्रयाणपटहः । प्रयाणक्रोशसंख्यापकाः स्पष्टम् अष्टौ अदीयन्त प्रहाराः पटहे ॥

उदिते च भगवति दिनकृति, नचिरादेव करेणुकयोह्यमानः, दण्डिभिरितस्ततः समुत्सार्यमाणजनसमूहो निर्जगाम नरपतिः । प्र-

स्थिते च राजनि, इतस्ततो वितस्तार तारतरस्तूर्याणां प्रतिध्वनिराशातटेषु। करिणां च षट्पदकोलाहलमांसलैः कर्णतालनिस्वनैस्तिरोदधिरे दुन्दुभिध्वनयः। सर्वतो विक्षिप्तचक्षुश्च भूपालः, अद्राक्षीत् आवासस्थानसकाशात्प्रतिष्ठमानं स्कन्धावारम्। वीक्षमाणश्च कटकं जगाम। प्रविश्य च बाह्यास्थानमण्डपस्थापितमासनमाचक्राम। अपास्तसमायोगश्च क्षणमासिष्ट ॥

अथ तत्र प्रतीहारो विज्ञापितवान्— "देव, प्राग्ज्योतिषेश्वरेण कुमारेण प्रहितो हंसवेगनामा दूतस्तोरणमध्यास्ते" इति। राजा तु "तमाशु प्रवेशय" इति सादरमादिदेश ॥

अनन्तरं च हंसवेगः सविनयं प्रभूतप्राभृतभृतां पुरुषाणां समूहेन महतानुगम्यमानः प्रविवेश राजमन्दिरम्। आरादेव पञ्चाङ्गालिङ्गिताङ्गनः प्रणाममकरोत्। ततो राजा पप्रच्छ—"हंसवेग, श्रीमान् कच्चित्कुशली कुमारः" इति। स तमवादीत्—"अद्य कुशली, येनैवं स्नेहस्नपितया गिरा सगौरवं पृच्छति देवः" इति ॥

स्थित्वा च मुहूर्तमिव पुनः स चतुरमुवाच— "अस्मत्स्वामिना संदेशम् अशून्यतां नयता पूर्वजोपार्जितं वारुणातपत्रम् आभोगाख्यम् अनुरूपस्थानन्यासेन कृतार्थीकृतम्। एतत्, प्रचेता इव यश्चतुर्णामर्णवानामधिपतिर्भूतो भावी वा, तमनुगृह्णाति छायया, नेतरम्। एतत्तावदनुगृह्णातु दृशा देवः। संदेशमपि विस्रब्धं श्रोष्यति" इत्येवमभिधाय, विवृत्य आत्मीयं पुरुषमभ्यधात्— "उत्तिष्ठ। दर्शय देवस्य" इति ॥

स वचनानन्तरमुत्थाय पुमान् ऊर्ध्वीचकार तत्। धौतदुकूलकल्पिताच्च निचोलकादकोषीत्। चित्रीयमाणचेताश्च सराजको

राजा, दण्डानुसाराधिरोहिण्या दृशा सादरम् ऐक्षिष्ट त्रैलोक्याद्भुतं तन्महच्छत्रम् । दृष्टे च तस्मिन् राज्ञा, शेषमपि प्राभृतं प्रकाशयांचक्रुः क्रमेण कार्मा: ॥

राजा तु छत्रदर्शनात्प्रहृष्टहृदयः, प्रथमप्रयाणे शोभनं निमित्तमिति मनसा जग्राह । अपनीते च तस्मात्प्रदेशात्प्राभृतसंभारे, क्षणमिव स्थित्वा " हंसवेग, विश्रम्यताम् " इति प्रतीहारभवनं विसर्जयांबभूव । स्वयमप्युत्थाय स्नात्वा मङ्गलाकाङ्क्षी, प्राङ्मुखः प्राविशदाभोगस्य छायाम् । विशत एवास्य छायाजन्मना जडिम्ना कुमुदमयमिव हृदयमभवत् । आहारकाले च हंसवेगाय विलिप्तशेषं चन्दनं वाससी परिवेषं नाम कटिसूत्रं तरङ्गकं नाम कर्णाभरणं प्रभूतं च भोज्यजातं प्राहिणोत् । एवंप्रायेण च क्रमेण जगाम दिवसः ॥

ततः अंशुमाली आभोगातपत्रप्रदानवार्तामिव निवेदयितुं वरुणाय वारुणीं दिशमयासीत् ॥

अस्यां च वेलायां विततवितानतलवर्ती नरेन्द्रः " कथय संदेशम् " इति हंसवेगमादिष्टवान् । प्रणम्य स कथयितुं प्रास्तावीत्—" देव पुरा वराहसंपर्कसंभूतगर्भया भगवत्या भुवा नरको नाम सूनुरसावि रसातले। महात्मनस्तस्यान्वये भगदत्तपुष्पदत्तवज्रदत्तप्रभृतिषु व्यतीतेषु बहुषु महीपालेषु, प्रपौत्रो महाराजभूतिवर्मणः पौत्रश्चन्द्रमुखवर्मणः पुत्रो देवस्य स्थितिवर्मणः सुस्थिरवर्मा नाम महाराजाधिराजो जज्ञे । तस्य च श्यामादेव्यां भास्करद्युतिर्भास्करवर्मा नाम कुमारः समभवत् । अयमस्य शैशवादारभ्य संकल्पः स्थेयान्—स्थाणुपादारविन्दद्वयात् ऋते नाहमन्यं नमस्कुर्यामिति । ईदृशश्चायं मनोरथः,सकलभुवनविजयेन वा मृत्युना वा यदिवा जगत्येकवीरेण

देवोपमेन मित्रेण संपद्यते । प्राग्ज्योतिषेश्वरो हि देवेन अजर्यं संगतमिच्छति । नाभिनन्दति चेद्देवः प्रणयम् , आज्ञापयतु किं कथनीयं मया स्वामिनः" इति ॥

विरतवचसि तस्मिन् , भूपालः सादरं जगाद— " हंसवेग, कथमिव तादृशि महात्मनि महाभिजने पुण्यराशौ परोक्षसुहृदि स्निह्यति, मद्विधस्यान्यथा स्वप्नेऽपि प्रवर्तेत मनः ? श्रेयांश्च संकल्पः कुमारस्य । स्वयं बाहुशाली मयि च सुहृदि हरात् ऋते कमन्यं नमस्यति ? संवर्धिता मे प्रीतिरमुना संकल्पेन । तत् तथा यतेथाः, यथा न चिरमियमस्मान् क्लेशयति कुमारदर्शनोत्कण्ठा " इति ॥

हंसवेगस्तु " देव, अभिजातमभिहितं देवेन । तदेवमभिनन्दितास्मदीयप्रणयो देवोऽपि, दिवसैः कतिपयैरेव परागतः प्राग्ज्योषेश्वर इति करोतु चेतसि " इत्युक्त्वा नमस्कृत्य निर्जगाम ॥

राजापि रजनीं तां कुमारदर्शनौत्सुक्यस्वीकृतहृदयः समनैषीत् । प्रभाते च प्रभूतं प्रतिप्राभृतं दत्त्वा हंसवेगं प्राहिणोत् । आत्मनापि ततः प्रभृति प्रयाणकैरनवरतैरभ्यमित्रं प्रावर्तत ॥

कदाचित्तु भण्डिरेकेनैव वाजिना कतिपयकुलपुत्रपरिवृतो मलिनवासाः पातकीव अपराधीव द्रोहीव मुषित इव राजद्वारमाजगाम । अवतीर्य च तुरंगमात् अवनतमुखो विवेश राजमन्दिरम् । दूरादेव विमुक्ताक्रन्दः पपात पादयोः ॥

अवनिपतिरपि दृष्ट्वा तम् उत्थाय विरलैः पदैः प्रत्युद्गम्य उत्थाप्य च गाढमुपगुह्य कण्ठे, करुणमतिचिरं रुरोद । शिथिलीभूतमन्युवेगश्च पुरेव पुनरागत्य निजासने निषसाद । प्रथमप्रक्षालितमुखे च भण्डौ मुखमक्षालयत् । समतिक्रान्ते च कियत्यपि काले भ्रातृमरण-

वृत्तान्तमप्राक्षीत् । अथाकथयच्च यथावृत्तमखिलं भण्डिः । अथ नरपतिस्तमुवाच– " राज्यश्रीव्यतिकरः कः " इति । स पुनरवादीत्– " देव, देवभूयं गते देवे राज्यवर्धने, गुप्तनाम्ना च गृहीते कुशस्थले, देवी राज्यश्रीः परिभ्रश्य बन्धनात् विन्ध्याटवीं सपरिवारा प्रविष्टेति लोकतो वार्तामश्रृणवम् । अन्वेष्टारस्तु तां प्रति प्रभूताः प्रहिता जना नाद्यापि निवर्तन्ते " इति । तच्चाकर्ण्य भूपतिरब्रवीत्—" किमन्यैरनुपदिभिः । यत्र सा, तत्र स्वयमहं यास्यामि । भवानपि कटकमादाय प्रवर्ततां गौडाभिमुखम् " इत्युक्त्वा चोत्थाय स्नानभुवमगात् । कारितशोकश्मश्रुवपनकर्मणा च प्रतीहारभवनस्नातेन भण्डिना सार्धमभुक्त । निनाय च तेनैव सह वासरम् ॥

अथापरेद्युरुषस्येव भण्डिर्भूपालमुपसृत्य, श्रीराज्यवर्धनभुजबलार्जितं साधनं सपरिबर्हं दर्शयांबभूव । अथ तत्सर्वमवनिपालः स्वीकर्तुं यथाधिकारमादिक्षदध्यक्षान् । अन्यस्मिंश्चाहनि हयैः स्वसारमन्वेष्टुमुच्चचाल विन्ध्याटवीम् । अवाप च परिमितैरेव प्रयाणकैस्ताम् । अथ प्रविशन्, आटवीकुटुम्बिनां गृहैरुपेतं वनग्रामकं ददर्श । तत्रैव चावसत् ॥

इति हर्षचरिते छत्रलब्धिर्नाम सप्तम उच्छ्वासः ॥

## ॥ अष्टम उच्छ्वासः ॥

अथापरेद्युरुत्थाय पार्थिवस्तस्माद्ग्रामकान्निर्गत्य विवेश विन्ध्याटवीम् । आट च तस्यामितश्चेतश्च सुबहून् दिवसान् ॥

एकदा तु भूपतेर्भ्रमत एव, आटविकसामन्तशरभकेतोः सूनुः

व्याघ्रकेतुर्नाम, अवनाटनासिकं चिपिटाधरं चिकिनचिबुकं शबरयुवानमादाय आजगाम । दूरे च स्थापयित्वा विज्ञापयांबभूव–"देव, सर्वस्यास्य विन्ध्यस्य स्वामी शबरसेनापतिर्भूकम्पो नाम । तस्यायं निर्घातनामा स्वस्रीयः सकलस्यास्य विन्ध्यकान्तारस्य पर्णानामप्यभिज्ञः, किमुत प्रदेशानाम् । एनं पृच्छतु देवः । योग्योऽयमाज्ञां कर्तुम् " इति कथिते च निर्घातः क्षितितलनिहितमौलिः प्रणाममकरोत् ॥

अवनीपतिस्तु स्वयमेव तमप्राक्षीत्—"अङ्ग, अभिज्ञा यूयमस्य सर्वस्योद्देशस्य । विहारशीलाश्च दिवसेष्वेतेषु भवन्तः । सेनापतेर्वा अन्यस्य वा तदनुजीविनः कस्यचित् उदाररूपा नारी आगता भवेद्दर्शनगोचरम् ?" इति ॥

निर्घातस्तु भूपालालापनप्रसादेन आत्मानं बहुमन्यमानः, दर्शितादरं व्यज्ञापयत्—"देव, प्रायेणात्र हरिण्योऽपि नापरिगताः संचरन्ति सेनापतेः, कुत एव नार्यः । नाप्येवंरूपा काचिदबला । तथापि देवादेशादिदानीमन्वेषणं प्रति प्रतिदिनमनन्यकृत्यैः क्रियते यत्नः । इतश्चार्धगव्यूतिमात्र एव मुनिमहिते महति महीरुहां षण्डे पाराशरी दिवाकरमित्रनामा गिरिनदीमाश्रित्य प्रतिवसति । स यदि विन्देद्वार्ताम् " इति ॥

तच्छ्रुत्वा नरपतिरचिन्तयत्—"श्रूयते हि तत्रभवतो ग्रहवर्मणो बालमित्रम् उत्पन्नसमाधिः सौगते मते युवैव काषायाणि गृहीतवान् " इति । प्रायशश्च जनस्य जनयति सुहृदपि दृष्टो भृशमाश्वासम् । अभिगमनीयाश्च गुणाः सर्वस्य । कस्य न प्रतीक्ष्यो मुनिभावः । भगवती वैधेयेऽपि धर्मगृहिणी गरिमाणमापादयति प्रव्रज्या,

किंपुनः सकलजनमनोमुषि विदुषि जने यतो नः कुतूहलि हृदयमभूत्सततमस्य दर्शनं प्रति। प्रासङ्गिकमेवेदमापतितमतिकल्याणम्। पश्यामः प्रयत्नप्रार्थितदर्शनं जनम्" इति। "अङ्ग, समुपादिश तमुद्देशम्, यत्रास्ते स पिण्डपाती" इत्येवमुक्त्वा च तेनैवोपदिश्यमानवर्त्मा प्रावर्तत गन्तुम्॥

अथ नानादेशीयैः शिलातलेषु उपविष्टैः संशयानैश्च निश्चिन्वद्भिश्च विवदमानैश्च व्याचक्षाणैश्च शिष्यतां प्रतिपन्नैर्दूरादेवावेद्यमानम्, अरुणेन चीवरपटलेन म्रदीयसा संवीतम्, तत्त्वं तपसः, कोशं कुशलस्य, वेश्म विश्वासस्य, मध्यमे वयसि वर्तमानं दिवाकरमित्रमद्राक्षीत्। अतिप्रशान्तगम्भीराकारारोपितबहुमानश्च सादरं दूरादेव शिरसा मनसा वचसा च ववन्दे॥

दिवाकरमित्रस्तु संपादितससंभ्रमाभ्युत्थानः, स्निग्धमधुरया वाचा सगौरवम् आरोग्यदानेन राजानमन्वग्रहीत्। पार्श्वे स्थितं च शिष्यमब्रवीत्—"आयुष्मन्, उपानय कमण्डलुना पादोदकम्" इति। राजा तु "भगवन्, दर्शनपुण्यानुगृहीतस्य मम पुनरुक्त इवायमार्यप्रयुक्तः प्रतिभात्यनुग्रहः। पाद्यमप्यपार्थकम्। आसतां भवन्तो यथासुखम्। आसीनोऽहम्"इत्यभिधाय क्षिताववोपाविशत्। स्वमेवासनं पुनरपि भेजे भदन्तः॥

स्थित्वा च कांचित्कालकलाम्, अवादीत्—"अद्यप्रभृति न केवलमयमनिन्द्यः, वन्द्योऽपि प्रकाशितसत्सारः संसारः। किं नाम नालोक्यते जीवद्भिरद्भुतम्, येन रूपमचिन्तितोपनतमिदं दृक्पथमुपगतम्। एवंविधैरनुमीयन्ते जन्मान्तरावस्थितसुकृतानि हृदयोत्सवैः। इहापि जन्मनि दत्तमेवास्माकममुना तपःक्लेशेन फलम् असुलभ-

दर्शनं दर्शयता देवानां प्रियम्। केन कृत्यातिभारेण भव्यो भूषितवान् भूमिमेतामभ्रमणयोग्याम्? कियदवधिर्वा शून्याटवीपर्यटनक्लेशः कल्याणराशेः? कस्माच्च संतप्तरूपेव ते तनुरियमसंतापार्हा?" इति॥

राजा तु सादरमब्रवीत्– "आर्य, धन्योऽस्मि, यदेवं मान्यो मन्यते माम्। अस्य च महावनपरिभ्रमणक्लेशस्य कारणमवधारयतु मतिमान्—मम हि विनष्टनिखिलेष्टबन्धोर्जीवितानुबन्धस्य निबन्धनमेकैव यवीयसी स्वसावशेषा। सापि भर्तुर्वियोगात् वैरिपरिभवभयाच्च भ्रमन्ती कथमपि विन्ध्यवनमिदमाविशत्। अतस्तामन्वेष्टुं वयं सततमिमामटवीमटामः। न चैनामासादयामः। कथयतु च गुरुरपि, यदि कदाचित्कुतश्चिद्वनचरतः श्रुतिपथमुपगता तद्वार्ता" इति॥

भदन्तः पुनरभ्यधात्— "धीमन्, न खलु कश्चिदेवंरूपो वृत्तान्तोऽस्मानुपगतवान्। अभाजनं हि वयमीदृशानां प्रियाख्यानोपायनानां भवताम्" इत्येवं भाषमाण एव तस्मिन्, अकस्मादागत्य अपरः शामिनि वयसि वर्तमानः प्रक्षरितचक्षुरभाषत—"भगवन्, महत्करुणं वर्तते। बालैव बलवद्व्यसनाभिभूता स्त्री वैश्वानरं विशति। संभावयतु ताम् अप्रोषितप्राणां भगवान्। अभ्युपपद्यतां समुचितैः समाश्वासनैः। अनुपरतपूर्वं कृमिकीटमपि दुःखितं दयाराशेरार्यस्य गोचरगतम्" इति॥

राजा तु जातानुजाशङ्को बाष्पायमाणदृष्टिः पप्रच्छ– "पाराशरिन्, कियद्दूरे सा योषिदेवंजातीया? जीवेद्वा कालमेतावन्तम्? पृष्टा वा त्वया– क्वासि, कस्यासि, कुतोऽसि, किमर्थं वनमिदमभ्युपगतासि? विशसि च किंनिमित्तमनलम्? इति। कथमार्यस्य गता गोचरम्? आकारतो वा कीदृशी?" इति॥

भिक्षुराचचक्षे— "महाभाग, श्रूयताम्—अहं हि प्रत्युषस्येवाद्य वन्दित्वा भगवन्तम् अनेनैव नदीरोधसा सैकतसुकुमारेण यदृच्छया विहृतवानतिदूरम् । एकस्मिंश्च वनलतागहने गिरिनदीसमीपभाजि नारीणां रुदितमाकर्णितवानस्मि । समुपजातकृपश्च गतोऽस्मि तं प्रदेशम् । दृष्टवानस्मि च अबलानां चक्रवालेन परिवृताम्, क्षामक्षामां पाण्डुवपुषम् , पूरितां दुःखेन कामपि योषितम् । सा तु समीपगते मयि, तदवस्थापि सबहुमानमानतमौलिः प्रणतवती । तस्माच्च स्त्रैणादुत्थायान्यतरा योषित् अभिहितवती— 'भगवन् , सर्वसत्त्वानुकम्पिनी प्रायः प्रव्रज्या । करुणाकुलगृहं च भगवतः शाक्यमुनेः शासनम् । परलोकसाधनं च धर्मो मुनीनाम् । प्राणरक्षणाच्च न परं पुण्यजातं जगति गीयते जनेन । इयं नः स्वामिनी, मरणेन पितुः, अभावेन भर्तुः, प्रवासेन च भ्रातुः, भ्रंशेन च शेषस्य बन्धुवर्गस्य, अनपत्यतया च निरवलम्बना, अग्निं प्रविशति । परित्रायताम् ।' इति । 'आर्ये, यथा कथयसि तथा । असद्गिरामगोचरोऽयमस्याः शोकः । शक्यते चेन्मुहूर्तमात्रमपि त्रातुम् , उपरिष्टाच्च व्यर्थेयमभ्यर्थना भविष्यति । मम हि गुरुरपर इव भगवान्सुगतः समीपगत एव । कथिते मयास्मिन्नुदन्ते नियतमागमिष्यति परमदयालुः । सौगतैः सुभाषितैः स्वकैश्च नानागमगुरुभिर्गिरां कौशलैः कुशलशीलामेनां प्रबोधपदवीमारोपयिष्यति ' इत्यभिधाय त्वरमाणोऽहमुपगत्य व्यतिकरमिमम् अत्रभवते गुरवे निवेदितवान् " इति ॥

अथ भूभृत् "आर्य, उत्तिष्ठ । दर्शय, कासौ ? यामः । कथंचिज्जीवन्तीं संभावयामः " इति भाषमाण एवोत्तस्थौ । समग्रशिष्यवर्गानुगतेन आचार्येण समस्तेन सामन्तलोकेन च पश्चादनुगम्यमानः,

पुरस्ताच्च तेन शाक्यपुत्रीयेन प्रदर्श्यमानवर्त्मा पद्भ्यामेव तं प्रदेशं प्रावर्तत। क्रमेण च समुपगतः शुश्राव लतावनान्तरितस्य मुमूर्षोर्महतः स्त्रैणस्य तत्कालोचितानन्नेकप्रकारानालापान्। सत्वरमुपससर्प। ददर्श च मुह्यन्तीमग्निप्रवेशायोद्यतां राजा राज्यश्रियम्। आललम्बे च मूर्च्छामीलितलोचनाया ललाटं हस्तेन तस्याः ससंभ्रमम्॥

अथ तेन भ्रातुः प्रेयसो हस्तसंस्पर्शेन सहसैव समुन्मिमील राज्यश्रीः। तथा च असंभावितागमनस्य अचिन्तितदर्शनस्य सहसा प्राप्तस्य भ्रातुः कण्ठे समाश्लिष्य, करुणकाहलेन स्वरेण कंचित्काल-मतिचिरं रुरोद। विगते च मन्युवेगे, वह्नेः समीपादाक्षिप्य भ्रात्रा नीता निकटवर्तिनि तरुतले निषसाद॥

शनैराचार्यस्तु तदा हर्ष इति विज्ञाय विवर्धितादरः शिष्येणोपनीतं स्वयमादाय नम्रो मुखप्रक्षालनायोदकमुपनिन्ये। नरेन्द्रोऽपि सादरं गृहीत्वा प्रथमं स्वसुश्चक्षुरक्षालयत्, पश्चादात्मनः। ततो नरेन्द्रो मन्दं मन्दमब्रवीत्स्वसारम्—"वत्से, वन्दस्व अत्रभवन्तं भदन्तम्। एष ते भर्तुर्हृदयं द्वितीयम् अस्माकं च गुरुः" इति। राजवचनात्तु राजदुहितरि नमन्त्याम् आचार्यः किंचित्परावृत्तनयनो दीर्घं निशश्वास। स्थित्वाच क्षणमेकं प्रदर्शितप्रश्रयो मृदुभाषी व्याजहार—"कल्याणराशे, अलं रुदित्वा। राजलोको नाद्यापि रोदनान्निवर्तते। क्रियतामवश्यकरणीयः स्नानविधिः। स्नात्वा च गम्यतां तामेव भूयो भुवम्" इति॥

अथ नरपतिरनुवर्तमानो लौकिकमाचारम् आचार्यवचनं च, उत्थाय स्नात्वा गिरिसरिति, सह स्वस्रा तामेव भूमिमयासीत्। तस्यां च भगिनीमभोजयत्। अनन्तरं च स्वयमाहारस्थितिमकरोत्।

भुक्तवांश्च बन्धनात्प्रभृति पावकप्रवेशोपक्रमणं यावत् विस्तरतः स्वसुः सर्वमशृणोद्व्यतिकरं परिजनतः ॥

ततः सुखासीनमेकत्र तरुतले भगिनीद्वितीयं राजानमाचार्यः समुपसृत्य वक्तुमुपचक्रमे—"श्रीमन्, आकर्ण्यताम्— आख्येयमस्ति नः किंचित्। रसातलनिवासी विषमुचामीशः, मुक्ताफलैरेकामेकावलीमकल्पयत् । चकार च मन्दाकिनीति नाम तस्याः। सा च अत्यन्तविषघ्नी। सा च अस्माकं कालेन शिष्यपरंपरया कथमपि हस्तमुपगता । सर्वसत्त्वरक्षाप्रवृत्तेन रक्षणीयशरीरेणायुष्मता विषरक्षापेक्षया गृह्यताम्" इत्यभिधाय तामुद्धृत्य बबन्ध बन्धुरे स्कन्धभागे भूपतेः ॥

समतिक्रान्ते च कियत्यपि काले, लब्धविस्रम्भा राज्यश्रीः, ताम्बूलवाहिनीं पत्रलतामाहूय उपांशु किमपि कर्णमूले शनैरादिदेश। दर्शितविनया च पत्रलता पार्थिवं व्यज्ञापयत्– "देव, देवी विज्ञापयति– न स्मराम्यार्यस्य पुरः कदाचिदुच्चैर्वचनमपि, कुतो विज्ञापनम् । इयं हि शुचामसह्यता शिथिलयति विनयम् । अबलानां हि पतिरपत्यं वावलम्बनम् । उभयविकलानां तु प्राणितम् अशालीनत्वमेव । आर्यागमनेन च कृतोऽपि प्रतिहतो मरणप्रयत्नः । अतः काषायग्रहणाभ्यनुज्ञया अनुगृह्यतामपुण्यभाजनं जनः" इति । जनाधिपस्तु तदाकर्ण्य तूष्णीमेवावातिष्ठत ॥

अथाचार्यः सुधीरमभ्यधात्—"आयुष्मति, शोको हि नाम पर्यायः पिशाचस्य, तारुण्यं तमसः । अस्य च आपातं सोढुं भूरिकाव्यकथाकठोराणि विदुषामपि हृदयानि नालम्, किमुत सरसबिसतन्तुदुर्बलमबलानां हृदयम् । एवं सति सत्यव्रते, वद किमत्र

क्रियते । कतम उपालभ्यते । कस्य पुर उच्चैराक्रन्द्यते । सर्वमक्षिणी निमील्य सोढव्यममूढेन मर्त्यधर्मणा । पुण्यवति, पुरातन्यः स्थितय एताः केन शक्यन्तेऽन्यथाकर्तुम् । अतिद्रुतवाहिनी चानित्यतानदी । सर्वमात्मनोऽनीश्वरं विश्वं नश्वरम् । एवमवधृत्य नात्यर्थमेवार्हसि मेधाविनि, मनसि तमसः प्रसरं दातुम् । अपि च, दूरगतेऽपि हि शोके नान्विदानीमपेक्षणीय एवायं ज्येष्ठः पितृकल्पो भ्राता भवत्या गुरुः । इतरथा को न बहुमन्येत कल्याणरूपमीदृशं संकल्पमत्रभवत्याः काषायग्रहणकृतम् । अखिलमनोज्वरप्रशमनकारणं हि भगवती प्रव्रज्या । ज्यायः खल्विदं पदमात्मवताम् । महाभागस्तु भिनत्ति मनोरथमधुना । यदयमादिशति, तदेवानुष्ठेयम् । यदि भ्रातेति, यदि ज्येष्ठ इति, यदि वत्सल इति, यदि गुणवानिति, यदि राजेति, सर्वथा स्थातव्यमस्य नियोगे" इत्युक्त्वा व्यरंसीत् ॥

उपरतवचसि च तस्मिन्, निजगाद नरपतिः—"आर्यमपहाय कोऽन्य एवमभिदध्यात् । अनभ्यर्थितदैवनिर्मिता हि विषमविपदवलम्बनस्तम्भा भवन्तो लोकस्य । स्नेहार्द्रमूर्तयो मोहान्धकारध्वंसिनश्च धर्मप्रदीपाः । अतः किंचिदर्थये भदन्तम्– इयं नः स्वसा बाला च बहुव्यसनखेदिता च सर्वकार्यावधीरणोपरोधेनापि लालनीया नित्यम् । अस्माभिश्च भ्रातृवधापकारिरिपुकुलप्रलयकरणोद्यतस्य बाहोर्विधेयैर्भूत्वा सकललोकप्रत्यक्षं प्रतिज्ञा कृता । अतो नियुक्तं कियन्तमपि कालमात्मानमार्योऽपि मदीये कार्ये । अद्यप्रभृति यावदयं जनो लघयति प्रतिज्ञाभारम् , तावदिमामत्रभवतः कथाभिश्च धर्म्याभिः कुशलप्रतिबोधविधायिभिरुपदेशैश्च अस्मत्पार्श्वोपयायिनीमेव प्रतिबोध्यमानामिच्छामि । इयं तु ग्रहीष्यति मयैव समं

समाप्तकृत्येन काषायाणि । अतः परं भवन्त एव बहुतरं जानन्ति ” इत्युक्त्वा तूष्णींबभूव नरपतिः ॥

भूयस्तु बभाषे भदन्तः– “भव्या न द्विरुच्चारयन्ति वाचम् । चेतसा प्रथममेव प्रतिग्राहिता गुणास्तावकाः कायबलिममुना जनेन । उपयोगश्चास्य लघुनि गुरुणि वा कृत्ये गुणवदायत्तः ” इति ॥

अथ तथा तस्मिन्नभिनन्दितप्रणये प्रीयमाणः पार्थिवस्तत्र तामुषित्वा विभावरीम् उषसि वसनालंकारादिप्रदानपरितोषितं विसृज्य निर्घातम् आचार्येण सह स्वसारमादाय प्रयाणकैः कतिपयैरेव कटकमनुजाह्नवि निविष्टं प्रत्याजगाम ॥

इति हर्षचरिते स्वसृलाभो नाम अष्टम उच्छ्वासः ॥

॥ समाप्तं हर्षचरितम् ॥

॥ श्रीः ॥

# ॥ विग्रहादिविशेषाः ॥

जन्मनां पद्म्, जनैः पद्यते प्राप्यते इति वा=जनपदः ॥

महेश्वरः भक्तिः-भजनीयः यस्य सः=माहेश्वरः ॥

दक्षिणा भवः=दाक्षिणात्यः ॥

परित्यज्य सर्वं व्रजतीति=परिव्राट् ॥

" मस्करमस्करिणौ वेणुपरिव्राजकयोः "

प्रतस्थे—"समवप्रविभ्यः स्थः"

कर्पटैः—जीर्णवस्त्रैः चरन्ति इति, कर्पटं तत्त्वं विदन्ति इति वा कार्पटिकाः ॥

उत्तानः शेतेइति=उत्तानशयः॥

जाते जाते विद्यते इति, जातं जातं वेत्तीति वा जातवेदाः ॥

त्रिशङ्कोः इदम्=त्रैशङ्कवम् ॥

दूर, दवीयस्, दविष्ठ ॥

भनञ्मि, भञ्ज्वः, भञ्ज्मः ॥

" ऊरोः अर्धम्, तत्र काशते इति=अर्धोरुकम् ॥ "

" वैकक्षकं तु तत् । यत्तिर्यक् क्षिप्तमुरसि ॥ " (माल्यम्)

तामरसं हस्ते यस्याः सा=तामरसहस्ता ॥

दर्शनस्य पन्थाः=दर्शनपथः ॥

सूर्यश्च चन्द्रमाश्च=सूर्याचन्द्रमसौ ।

गन्तुम् इच्छुः=जिगमिषुः ॥

क्षीणेन—क्षीणभागेन भूयिष्ठा=क्षीणभूयिष्ठा ॥

दिनस्य मध्यम्=मध्यंदिनम् ॥

" ज्येष्ठामूलीयमिच्छन्ति मासमाषाढपूर्वजम् ॥ "

"हर्षादुत्सवकाले यदलंकाराम्बरादिकम् । आकृष्य गृह्यते पूर्णपात्रं पूर्णानकं च तत् ॥ "

ब्रह्म—वेदः, मुखे येषां ते=ब्रह्ममुखाः ॥

पञ्च वा षड्वा=पञ्चषाणि ॥

अष्ट वर्षाः यस्य सः=अष्टवर्षः । ईषदसमाप्तः अष्टवर्षः=अष्टवर्षदेशीयः । " ईषदसमाप्तौ कल्पब्देश्यदेशीयरः " ॥

चतुर्भिः अङ्गैः—जानुभ्यां हस्ताभ्याम् ।

मौखारिणां तन्नाम्नां राज्ञां वंशः =मौखारिवंशः ॥

मङ्गलम् अर्हति, मङ्गले साधु वा=मङ्गल्यम् ॥

मुहूर्तं विदन्ति=मौहूर्तिकाः ॥

समुत्सारितः निखिलः अनिबद्धः =(असंबद्धः) लोकः यस्मात्तत्=समु...कम् ॥

"सा तु नक्षत्रमाला स्यात्सप्तविंशतिमौक्तिका"

"भोगागारं वासगृहम्"

कवचं हरति (स्वीकरोति) इति =कवचहरः । "वयसि च" इति अच्प्रत्ययः ॥

"वसनं वसतिः, तत्र साधुः= वासतेयी रात्रिः ।" "पथ्यतिथिवसतिस्वपतेर्ढञ्"

वेत्रपाट्टिकाम् अधिशयानः— "अधिशीङ्स्थासां कर्म"

ब्राह्मणसात् = ब्राह्मणदेयम् । "देये त्रा च"

अष्टाङ्गस्य— "शल्यम्, शालाक्यम्, कायचिकित्सा, भूतविद्या, कौमारभृत्यम्, अगदतन्त्रम्, रसायनतन्त्रम्, वाजीकरणतन्त्रम् ॥

स्वपतये साधु=स्वापतेयम् ।

प्रशस्तः पुरुषः=पुरुषप्रकाण्डम् ।

अहमिव पश्यति दृष्टिविषयीभवतीति=मादृशी । त्वादृश, तादृश, ईदृश, कीदृश ।

जजागार जजागरतुः जजागरुः। लटि—जागर्ति, लुङि— अजागरीत् ।

"अपस्नातो मृतस्नातः"

कृशस्य भावः=क्रशिमा ।

न पन्थाः=अपथम्, अपन्थाः।

"पथो विभाषा"

कुत्सितः पुरुषः=कापुरुषः ।

कर्मणः अन्तः अस्मिन् अस्तीति कर्मान्तिकः ।

स्त्रीणां समूहः—स्त्रैणम् ।

ललाटं तापयन्तीति ललाटंतपाः।

व्यरंसीत्—लुङ् । (विरमति)

तनूं न पातयतीति=तनूनपात्।

अक्षाणां भूतानां व्यवहाराणां वा पटले समूहे नियुक्तः=अक्षपटलिकः; ग्रामस्य अक्षपटलिकः=ग्रामाक्षपटलिकः ॥

कर्मशील: कार्मः । " कार्म-
स्ताच्छील्ये "
स्थिर , स्थेयस् , स्थेष्ठ ।
न जीर्यतीति=अजर्यम् । "अ-
जर्यं संगतम् "
देवस्य भावः=देवभूयम् ।
अनुपदम् अन्वेष्टा=अनुपदी ॥
" अनुपद्यन्वेष्टा "
अवनाटा नासिका=यस्य सः
=अव—कः । " अवटीटोऽ-
वनाटश्चावभ्रटो नतनासिके"
स्वसुः अपत्यम्=स्वस्रीयः ।
शाक्यपुत्रस्य--बुद्धस्य अयम्=
शाक्यपुत्रीयः ॥
मरणाशङ्काविषयः = मुमूर्षु ।
" आशङ्कायां सन् "
शालाप्रवेशम् अर्हति=शाली-
नः—अधृष्टः । अशालीनत्वम्
=धाष्टर्यम् ॥
धर्मात् अनपेताः=धर्म्याः ॥



## ॥ शोधनम् ॥



| पुटः | पङ्क्तिः | शुद्धपाठः |
|---|---|---|
| ३ | ३ | पातालस्वामिनामा |
| ६ | १ | सत्त्वोत्कर्षेण |
| ७ | १९ | अवतीर्णे च |
| ८ | १ | कस्मिश्चित्काले |
| ९ | १६ | मौखरिवंशः |
| १८ | ११ | पर्यङ्किकायाम् |
| ,, | १५ | अतिचक्राम |
| ३२ | १ | शाक्यपुत्रीयेण |

# GLOSSARY.

*This follows Text order.*

जनपद—Country.
प्रतिनिधि—Representative
बुध—Wise, Planet Mercury
अर्जुन—White, Arjuna.
भीष्म—Terrific, Bhishma.
कपर्दिन्—God Siva.
परिव्राट्—Ascetic.
मस्करिन्—Ascetic.
अर्हयति—Respects.
फलति—Produces.
कार्पटिक—Pilgrim.
आकर—Mine.
श्रीफल—Bilva fruit.
उपायन—Present.
उपगूह्—Charmingly.
अर्गल—Bolt.
संकेत—Agreement.
उत्तानशय—Lying supinely
उष्णीष—Turban.
विस्रब्धम्—Confidently.
कौणप—Fiend.
अदीर्यत—Burst.
आस्फोटन—Slapping.
बालिश—Fool.
प्रकोष्ठ—Fore-arm.
काकोदर—Serpent.
भनज्मि—I shall destroy.
चर्मफलक—Shield.
अर्धोरुक—Under wear (equivalent of Modern shorts).
कक्ष्या—Sash.
सत्त्व—Inherent power.
व्यतिकर—Occurrence.
बल—Strength, Balarama.
बहुलासु—In the Krittikas.
लक्ष्य—Aim
अभिजन—Descent.
औत्सुक्य—Ardent desire.
विविक्त—Solitary.
प्रतीपम्—Bock.
कौतुक—The marriage thread worn on the wrist.
पेशल—Gently.
लाज—Fried grain.
उपधान—A pillow.
वासगृह—Bed-chember.
वासतेयी—Night.
चीरचीरिका—A piece of rag
पफाल—Was broken.
परिबर्ह—Royal insignia.
स्कन्धावार—Capital.

संज्ञा—Hint·
विचेष्टमान—Rolling.
जग्ध—Eaten.
आवर्जित—Attracted.
निशित—Sharp.
तक्ष्णोति—Cuts.
उष्ट्र—Camel.
उत्पात—Portent.
प्रतिपत्ति—Course of action
स्वापतेय—Property.
कौलेयक—Dog.
शौण्ड—Skilled.
पराचीन—Opposed to.
आक्रन्द—Crying out.
वितर्दिका—A balcony
माम् अन्तरेण—About me.
अनया दिशा—In this way
कर्मान्तिक—Servant
आवेग—Excitement.
अलगर्द—Water - serpent
अश्ववार—Covalry man.
कज्जल—Lamp-black.
तनूनपात्—Fire.
महासंधिविग्रहाधिकृत—The chief minister entrusted with affairs of peace and war.
प्रचार—Pasturage.
उद्वसित—House.
उपलिङ्ग—Evil portent.
ग्रामाक्षपटलिक — Village-munsiff.
करणि—Clerk (Karnam)
समायोग— The assembly (or Robe)
तोरण—Gateway.
निचोलक—Case
अकोषीत—Drew.
कार्मि—Servant
संभार—Heap.
वितान—Canopy.
अवनाट, चिपिट, चिकिन—Honging.
पराशरिन्—Religious men-dicent.
प्रतीक्ष्य-Worthy of Regard
वैधेय—Idiot
प्रव्रज्या—Asceticism.
चीवर-Sanyasin's gurment
भदन्त— Buddhist mendi-cent.
यवीयसी—Sister.
काहल—Excessive.
स्नेह—Oil, Affection.